# पश्यत विविक्तपुष्पकरण्डम्

चिरस्मरणीयः कश्चन क्षणः।

श्रावणपूर्णिमातिथिं पुरस्कृत्य अस्माकं राष्ट्रियसंस्कृतविद्यापीठे प्रतिवर्षमिव अस्मिन्नपि वर्षे ''संस्कृतसप्ताहमहोत्सवानाम्'' आयोजनार्थं कुलपतीनामनुमतिः स्वीकृता। तेषां निर्देशेनैव मुख्यातिथिपदमलंकर्तुं समाह्वातव्याः इति श्रीतिरुमल-तिरुपतिदेवस्थानानां प्रधानाङ्गभूतायाः हिन्दूधर्मप्रचारपरिषदः प्रधानसचिवानां प्राच्यपाश्चात्यविद्याविशरदानां गीर्वाणवाणीसमुपासकानाम् आन्ध्रकवितल्लजानां चुळुकीकृतावधानविद्यापाटववैभवानां श्रीमतां **डा. राळ्ळबण्डिकविताप्रसाद**महोदयानां सकाशं अगच्छमहम्।

१०-०८-२०१० दिनांङ्कः। सायं चतुर्वादनसमयः। तेषां गृहाङ्गणे अहं तैः सादरमाहूतः। आवयोः प्रथमपरिचयसन्दर्भादपि तेषां मयि अव्याजभ्रातृस्नेहः वर्तते। ''आगच्छ'' इति प्रसारितहस्ताभ्यामाह्वानम्। मुखे सात्मीयः मधुरो हासः। हृदयान्निर्गतानि मधुरमधुराणि वचांसि। एतानि प्रसादचिह्नानि सर्वाणि कविताप्रसादसहजसौजन्य-श्रीचिह्नानि। विद्यापीठीयकार्यक्रमविषये मदाह्वानाय ''ओम्'' इति तेषां प्रतिस्पन्दनम्। येन कार्येणगतं तत् सिद्धम्।

परन्तु तदा कस्यचिन्नवारम्भस्य शुभावसरः सम्पन्नः। तस्मिन् शुभक्षणे ते मह्यं तैर्ग्रथितं "ఒంటరి పూలబుట్ట" इति नामकं मुक्तककविता‍गुच्छं बहूकृतवन्तः।

वृत्त्या प्रवृत्त्या च कवित्वप्रियोऽहम्। गृहागमनसमनन्तरमेव तत्पठितुमारब्धवान्। लोके केचन ग्रन्थाः प्रथमवीक्षणमात्रेणैव पठनासक्तिं जनयन्ति, केचन प्रयत्नपठनीयाः भवन्ति। केचन पठनविरतान् कुर्वन्ति। प्रस्तुतग्रन्थः प्रथमगणीयः। सायं सार्थसप्तवादनेऽहं तत् पुस्तकं पठितुमारब्धवानित्येवाहं जानामि। पुनः रात्रौ एकवादने पुस्तकस्य अन्तिमपुटस्थस्य कवितामुक्तकमौक्तिकस्य पठनोत्तरक्षणे एव पुनः स्पृहाम् आप्तवानहम्। मोदः। प्रमोदः। आनन्दः। रसानन्दतुन्दिलोऽभवम्।

ततः प्रातः चतुर्वादनपर्यन्तमपि पुनः पुनः पठन्नेवासम्। ''रात्रौ तुरीययामः कालः।'' इति कवित्वरचनानुकूलस्य समयस्य निर्देशः कृतः काव्यतत्त्वविद्भ्यः। अनुपदमेव तदनुवादकार्योद्यमरतः अभवमहम् ।

प्रातरेव कविशेखरान् कविताप्रसादमहोदयान् अहं संप्रार्थितवान् एतस्य ग्रन्थस्य संस्कृतानुवादं कर्तुम् मे अनुमतिं प्रयच्छन्त्विति। ते ओमिति अङ्गीकृतवन्तः। महता मोदेन अहमनुवादकार्यमारब्धवान्। संसिद्धः इदानीं ''विविक्तपुष्पकरण्डः''

अयम्। प्रत्यक्षरमहत्तरभावगर्भिता आन्ध्रकृतिरियम्। यथाशक्ति मातृकागतभावगभीरतायाः, प्रयोगसौन्दर्यस्य च रक्षणं कर्तुं अहं नितान्तं परिश्रान्तः।

ग्रन्थस्य महत्ता तादृशी। मुक्तच्छन्दसि ग्रथितानि अम्लानकवितासुवर्णपुष्पाणि चतुश्शतसङ्ख्याकानि वाङ्मातुर्धम्मिल्लभूषणानि सहृदयहृदयावर्जकपरिमळभराणि विभान्त्यस्मिन् ग्रन्थरत्ने। पुनः कस्यचिन्नवगाथासप्तशतेः कमनीयावतार इव द्योतते। कवित्वोत्कर्षप्रशंसात्मकाः सुन्दरसुमधुरभावनाः अत्र विहङ्गायमानाः स्वेच्छया विहरन्ति। अस्माकं नित्यजीवने दृश्यमानाः कठोरकर्कशासुरीस्वभावव्यवहाराः अत्र कविताकुठारेण प्रहारिताः।मकरन्दमाधुरीसंभरितरसमयतरङ्गिणीयं कवितावाहिनी।
समकालीनसमाजभूतिहेतवः उपदेशविभूतयोऽत्र संदृश्यन्ते प्रचुरतया। नैकेषां विशिष्टतत्त्वानां मनोहरनिर्वचनान्यपि अत्र भूयो भूयः दृश्यन्ते। व्यञ्जनाव्यापारस्य अपूर्वचमत्कारवैभवस्य विराड्रूपमिदम्। नैकानि ध्वनिप्रभेदोदाहरणानि, गुणीभूतव्यङ्ग्यस्य उदाहरणभूतानि च मुक्तकान्यस्मिन् ग्रन्थे समुल्लसन्ति।

पठितॄणां रुच्यर्थमत्र प्रस्तूयन्ते काश्चन कविताः।

"కవికన్నా కవిత బరువెక్కువ।
అందుకే త్వరగా వదిలించుకుంటాడు....."

''कवेरपि कविताभारोऽधिकतरः।
अत एव सः यावच्छीघ्रम् अवसितभारो भवितुमिच्छति।।'' इत्यस्य ममानुवादः।

सत्यमिदम्। रामायणमहाभारतादिभ्यः लघुमुक्तकविशेषपर्यन्तमपि कवितायाः भारः कविभिरनुभूतः। अत एव ''महत्त्वाद्भारवत्वाच्च महभारतमुच्यते'' इति महाभारते एव व्यासमहर्षिणा प्रोक्तम्। कविताभारः तादृशः। कवेः कविताभारः पितुः कन्याभारसदृशः।कविः कवितां सहृदयहस्ते, पिता पुत्रीं जामातृहस्ते च निक्षिप्य अवसितभारौ भवतः।

"అక్షరాల చెట్లమీద ఆలోచనల పక్షులు।
పూలు పండ్లు కవిత్వం"

रूपकालङ्कारभूषितस्यास्य मुक्तकस्य मया
''वर्णतरौ भावखगाः।
फलपुष्पे काव्यगणाः।।'' इति भ्रमरीवृत्ते अनुवादः कृतः। मधुरभावपूर्णेयं कविता।

"గుడిని పడగొట్టినా దైవం నిలబడుతుంది।
గుండె బద్దలైనా ప్రేమ నిలిచే ఉంటుంది॥"

''पातितेऽप्यालये देवो विलसत्येव।

शकलीकृतेऽपि हृदये प्रणयः तिष्ठत्येव।।'' इति मम अनुवादः।
अस्यां कवितायां देवस्य इव प्रणयस्य अपि शश्वद्वर्तित्वं कविभिराविष्कृतम्।
एवं वस्त्वलङ्कारसौन्दर्यप्रधानाः कविताः नैकशः अत्र विद्यन्ते।
अथ रसनिर्भराणां कासांचित्कवितानां गभीरतागरिमाऽत्र प्रदर्श्यते।

"రాలే కన్నీటిచుక్క కంటిని ప్రశ్నిస్తోంది।
"ఎందుకేడుస్తున్నావ్?" అని.
మనస్సు కేసి చూసి మౌనంగా ఉండిపోయింది కన్ను."

''पतदश्रुबिन्दुः नेत्रं पृच्छति किमर्थं रोदिषि त्वमिति।
नेत्रं मनः प्रति पश्यत् मौनेन तिष्ठति।।''

अत्र वाच्यव्यङ्ग्ययो परस्परस्पर्धा अत्यन्तमनुभूयते। अचेतनयोः अश्रुबिन्दुनेत्रयोः चेतनत्वापादनं, परिणतकारुण्यस्य शतभावविस्फोटात्मकं मौनव्याख्यानं च विशिष्टतां सम्पादयतः।

"ఎడారిలో ఒయాసిస్సు
ఎన్ని ఒంటెల కన్నీరో....?"

''मरुमध्ये रम्यपल्वलम्।
कति क्रमेलकानां बाष्पस्थानम्?''

इतीदं मुक्तकम् नानागभीरभावमेदुरम्। अत्र वाच्यातिशायित्वं व्यङ्ग्यातिशायित्वं च समशिखराग्रसीम्नि विभ्राजमाने स्तः। मरुस्थले रम्यपल्वलशोभायाः नित्यजलान्वेषणरतानां क्रमेलकानां शोक एव कारणमिति वाच्यार्थः यावदुदात्तः रम्यपल्वलेषु मोदः नैव तन्निर्माणरतानां अविश्रान्तसुश्रान्तानां श्रमजीविनां खेदः अपि गणनीयः इति व्यङ्योपदेशोऽपि तावदेवोदात्तः। ततोऽपि मरुमध्ये रम्यपल्वलस्थानमित्यनेन - मरुतुल्येऽस्मिन् नवीनसमाजे मानवत्वं पल्वलायते। तदपि बहूनामज्ञातजनानां स्वेदखेदजमोदफलमिति भावना अति गभीरा।

"ఆమె అరణ్యమై తగలబడుతోంది!
భర్త చెంబుడు నీళ్లు పోసి నిద్రిస్తున్నాడు"

''सा अरण्यमेव भूत्वा परिदह्यमाना अस्ति।
पतिस्तु पात्रमात्रजलं क्षिप्त्वा निद्राति।।'' इत्यनूदितोऽयम् कवितांशः। अत्र अतिकर्कशे अधुनातनसमाजे महिलानां दैन्यं, अभद्रताभावः, भर्तृस्थानीयानां पुरुषाणां श्रद्धेयताराहित्यं च परिस्फुरतः।

"పింఛాలకోసం నెమలిని
'యాసిడ్' పోసి చంపేశాడు"

''पिञ्छानां कृते मयूरम् आम्लसेचनं कृत्वा मारितवान्।'' इत्यस्यां कवितायां मानवः स्वार्थपूरितस्वाभीष्टसम्पादनार्थं समस्तामपि प्रकृतिं कथं विनाशयतीति नृणां स्वार्थधियः उपालम्भनं करोति कविरत्र।

"వేయి ధనుస్సులను ఎదిరించినవీరుడు
వసంతయుద్ధంలో చెరుకువింటి ముందు ఓడిపోయాడు."

''सहस्रधनूंषि अभिद्रुतवान् महायोद्धा। वसन्तयुद्धे तु इक्षुधनुषा पराजितः।।'' अजहल्लक्षणामूलध्वनिविशेषोऽयं शृङ्गारवीररसयोःस्पर्धायां शृङ्गारस्यातिशयं निरूपयति।

एवं कविवरेण्यानां श्रीकविताप्रसादानां भावप्रौढिः, शब्दसारल्यं, उपदेशगरिमा, सालङ्कारप्रयोगचातुरी, सन्ततव्यञ्जनाव्यापारोपसानाप्रीतिश्च ग्रन्थेऽस्मिन् प्रतिवर्णं, प्रतिपदं, प्रतिवाक्यं, प्रतिप्रयोगं सातिशयं संदृश्यन्ते।

"ఒంటరి పూలబుట్ట" नामकस्य अस्य ग्रन्थस्य सस्कृतानुवादं कर्तुं मया समवाप्तोऽयमवकाशः सुवर्णलाभसदृशः। ममानुवादशक्तेर्नैशित्यवृद्धेरयं प्रकृष्टसाधीभूतः इति कथने नास्त्यतिशयलेशः। मया कृतस्यास्य संस्कृतानुवादस्य ''विविक्तपुष्पकरण्डः'' इत्यभिधानमकारि। बाह्याकृतौ सरलतां वहतः अस्य ग्रन्थस्य अनुवादे बहु क्लेशाः अनुभूताः मया। केषांचन आन्ध्रशब्दानां तुल्यार्थबोधाकाः संस्कृतशब्दाः महताक्लेशेनैव मया सम्पादिताः। कुत्रचित् आन्ध्राभाषासम्बन्धिनां केषांचन विशिष्टप्रयोगानां संस्कृतीकरणे अपि महताकष्टेनैव साफल्यप्रायसिद्धिमहं सम्पादितवान्। एवंविधे महत्यस्मिन्ननुवादरूपसारस्वतोपासने मातृकाभावपरिरक्षणे मया सालोक्य-सामीप्य-सारूप्य-सायुज्यात्मिका चतुर्विधाऽपि सिद्धिः सम्पादितेति वक्तुं मोमुद्यते मे मनः। महत्यस्मिन् कार्ये यदि सन्ति केऽपि दोषाः ते सर्वेऽपि ममाल्पधियः विकृतिपरिपाकाः। अत्र विद्यमानाः गुणविशेषास्सर्वेऽपि मत्कुलदेवतायाः श्रीमातुः ललितापराभट्टारिकायाः करुणाकटाक्षवीक्षणलेशफलांशाः। तथैव मूलग्रन्थगतपथगतिसारल्यमपि अत्र मम साफल्यस्य हेतुरिति वक्तुं नास्ति मनागपि सन्देहः। ततः परं सहृदयाः एव प्रमाणम्।

अस्य ग्रन्थस्य संस्कृतानुवादकार्यार्थं मह्यमनुमतिं दत्त्वा मदीयोद्यमस्य महान्तं प्रोत्साहं दत्तवद्भ्यः **श्रीकविताप्रसादमहोदयेभ्यः** ममाधमर्ण्यं प्रकटयामि। इमं ग्रन्थं Institue of Sanskrit and Indological Studies नाम्न्याः संस्थायाः पक्षतः प्रकाशितवद्भ्यः सुहृद्वरेभ्यः विद्वद्वरेभ्यश्च **डा. इवटूरि श्रीनिवासराव्** महोदयेभ्यः हार्दान् धन्यवादान् व्याहरामि।

**बुधजनविधेयः**
**डा राणिसदाशिवमूर्तिः**

अवचितानि

पुष्पाणि

सर्वाणि

देवमन्दिरं गतानि

इमं

विविक्तपुष्पकरण्डम्

अपहाय ........

# विविक्तपुष्पकरण्डः



आन्ध्रकृतिकर्ता

**डा राळ्ळबण्डि कविताप्रसादः**

संस्कृतानुवादकः

**डा राणि सदाशिवमूर्तिः**

Published by
Institute of Sanskrit and Indological Studies
Vishakapatnam
2010

